॥ श्रीकृष्णस्तुतिः ॥

देवा ऊचुः -
कृष्णाय पूर्णपुरुषाय परात्पराय यज्ञेश्वराय परकारणकारणाय ।
राधावराय परिपूर्णतमाय साक्षाद्गोलोकधामधिषणाय नमः परस्मै ॥ १॥

योगेश्वराः किल वदन्ति महः परं त्वां
तत्रैव सात्वतमनाः कृतविग्रहं च ।
अस्माभिरद्य विदितं यददोऽद्वयं ते
तस्मै नमोऽस्तु महसां पतये परस्मै ॥ २॥

व्यङ्ग्येन वा न न हि लक्षणया कदापि
स्फोटेन यच्च कवयो न विशन्ति मुख्याः ।
निर्देश्यभावरहितः प्रकृतेः परं च
त्वां ब्रह्म निर्गुणमलं शरणं व्रजामः ॥ ३॥

त्वां ब्रह्म केचिदवयन्ति परे च कालं
केचित्प्रशान्तमपरे भुवि कर्मरूपम् ।
पूर्वे च योगमपरे किल कर्तृभाव-
मन्योक्तिभिर्न विदितं शरणं गताः स्मः ॥ ४॥

श्रेयस्करीं भगवतस्तवपादसेवां
हित्वाथ तीर्थयजनादि तपश्चरन्ति ।
ज्ञानेन ये च विदिता बहुविघ्नसङ्घैः
सन्ताडिता किमु भवन्ति न ते कृतार्थाः ॥ ५॥

विज्ञाप्यमद्य किमु देव अशेषसाक्षी
यः सर्वभूतहृदयेषु विराजमानः ।
देवैर्नमद्भिरमलाशयमुक्तदेहै-
स्तस्मै नमो भगवते पुरुषोत्तमाय ॥ ६॥

यो राधिकाहृदयसुन्दरचन्द्रहारः
श्रीगोपिकानयनजीवनमूलहारः ।
गोलोकधामधिषणध्वज आदिदेवः
स त्वं विपत्सु विबुधान् परिपाहि पाहि ॥ ७॥

वृन्दावनेश गिरिराजपते व्रजेश
गोपालवेषकृत नित्यविहारलील ।

राधापते श्रुतिधराधिपते धरां त्वं
गोवर्द्धनोद्धरण उद्धर धर्मधाराम् ॥ ८॥

इति गर्गसंहितायां गोलोकखण्डे तृतीयाध्यायान्तर्गता गोलोके देवानां श्रीकृष्णस्तुतिः समाप्ता ।

॥ श्रीकृष्णस्तुतिः २ ॥

दुर्वासामुनिरुवाच -
बालं नवीनशतपत्रविशालनेत्रं बिम्बाधरं सजलमेघरुचिं मनोज्ञम् ।
मन्दस्मितं मधुरसुन्दरमन्दयानं श्रीनन्दनन्दनमहं मनसा नमामि ॥ १॥

मञ्जीरनूपुररणन्नवरत्नकाञ्ची श्रीहारकेसरिनखप्रतियन्त्रसङ्घम् ।
दृष्ट्याऽऽर्तिहारिमषिबिन्दुविराजमानं वन्दे कलिन्दतनुजातटबालकेलिम् ॥ २॥

पूर्णेन्दुसुन्दरमुखोपरि कुञ्चिताग्राः केशा नवीनघननीलनिभाः स्फुरन्ति ।
राजन्त आनतशिरःकुमुदस्य यस्य नन्दात्मजाय सबलाय नमो नमस्ते ॥ ३॥

श्रीनन्दनन्दनस्तोत्रं प्रातरुत्थाय यः पठेत् ।
तन्नेत्रगोचरो याति सानन्दं नन्दनन्दनः ॥ ४॥

इति गर्गसंहितायां गोलोकखण्डे विंशाध्यायान्तर्गता
दुर्वससा कृता श्रीकृष्णस्तुतिः समाप्ता ।

॥ श्रीकृष्णस्तुतिः ३ ॥

श्रीनारद उवाच -
अथ देवगणैः सार्द्धं शक्रस्तत्र समागतः ।
गतमानो गिरौ कृष्णं रहसि प्रणनाम ह ॥ १॥

इन्द्र उवाच -
त्वं देवदेवः परमेश्वरः प्रभुः पूर्णः पुराणः पुरुषोत्तमोत्तमः ।
परात्परस्त्वं प्रकृतेः परो हरिर्मां पाहि पाहि द्युपते जगत्पते ॥ २॥

दशावतारो भगवांस्त्वमेव रिरक्षया धर्मगवां श्रुतेश्च ।
अद्यैव जातः परिपूर्णदेवः कंसादि दैत्येन्द्रविनाशनाय ॥ ३॥

त्वन्मायया मोहितचित्तवृत्तिं मदोद्धतं हेलनभाजनं माम् ।
पितेव पुत्रं द्युपते क्षमस्व प्रसीद देवेश जगन्निवास ॥ ४॥

ओन्नमो गोवर्धनोद्धरणाय गोविन्दाय गोकुलनिवासाय गोपालाय
गोपालपतये गोपीजनभर्त्रे गिरिगजोद्धर्त्रे करुणानिधये जगद्विधये
जगन्मङ्गलाय जगन्निवासाय जगन्मोहनाय कोटिमन्मथमन्मथाय
वृषभानुसुतावराय श्रीनन्दराजकुलप्रदीपाय श्रीकृष्णाय
परिपूर्णतमाय तेऽसङ्ख्यब्रह्माण्डपतये गोलोकधामधिषणाधिपतये
स्वयम्भगवते सबलाय नमस्ते नमस्ते ॥ ५॥

श्रीनारद उवाच -
इति शक्रकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ।
सर्वा सिद्धिर्भवेत्तस्य सङ्कटान्न भयं भवेत् ॥ ६॥

इति गर्गसम्हितायां गिरिराजखण्डे चतुर्थाध्यायान्तर्गता
इन्द्रस्य श्रीकृष्णस्तुतिः समाप्ता ।